॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

तिङन्ते

## जुहोत्यादयः



संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।



YouTube संस्कृतसारः @sanskrit sar

**प्रस्तोता**

डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री 'संस्कृतव्याकरण' में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु 'संस्कृतसारः' इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन 'लघुसिद्धान्तकौमुदी' स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।

सूचना— यह अध्ययन सामग्री पूर्णतः निश्शुल्क है तथा इस पर कोई कॉपीराइट भी नहीं हैं। हमारे द्वारा निर्मित इसी प्रकार की अन्य शिक्षण समग्री को हमारे इस अकाउंट https://archive.org/details/@sanskrit_sar से डाउनलोड करें।

दिनाङ्कः-

2.12.2021

अस्माकं सम्पर्कसूत्राणि—
e-mail अणुवाक्— samskritsaarah@gmail.com
YOUTUBE — संस्कृतसारः @sanskrit sar
FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# जुहोत्यादिगणे धातवः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते जुहोत्यादयः)

## अथ परस्मैपदिनः

1. हु दानादनयोः
2. ञिभी भये
3. ह्री लज्जायाम्
4. पॄ पालनपूरणयोः
5. ओँहाक् त्यागे

## अथात्मनेपदिनः

1. माङ् माने शब्दे च
2. ओँहाङ् गतौ

## अथोभयपदिनः

1. डुभृञ् धारणपोषणयोः
2. डुदाञ् दाने
3. डुधाञ् धारणपोषणयोः
4. णिजिँर् शौचपोषणयोः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'हु' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते जुहोत्यादयः)

| लँट् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | जुहो +ति = जुहोति | जुहु +तस् = जुहुतः | जुहु+अति = जुह्वति |
| मध्यमः | जुहो+सि = जुहोषि | जुहु+थस् = जुहुथः | जुहु+थ = जुहुथ |
| उत्तमः | जुहो+मि = जुहोमि | जुहु+वस् = जुहुवः | जुहु+मस् = जुहुमः |

हु + लँट्/तिप्
हु शप्+ति (जुहोत्यादिभ्यः श्लुः)
हु हु+ ति (श्लौ)
झु/ जु हु+ति (कुहोश्चुः अभ्यासे चर्च)
जुहोति (सार्वधातुकार्धधातुकयोः)

जु हु + झि
जु हु + अत् इ
(उवँङादेशं बाधित्वा यण्)
जुह्वति

हु दानादनयोः॥ १॥ अनुदात्तः परस्मैभाषः।
(दानञ्चेह घृतादेरग्नौ प्रक्षेपः, हवनम् इति यावत्)

❖ शपः श्लु-विधायकं विधिसूत्रम्—
सूत्रम्— जुहोत्यादिभ्यः श्लुः (२,४.७५)
अर्थः— शपः श्लुः स्यात्॥

❖ द्वित्वविधायकं विधिसूत्रम्—
सूत्रम्— श्लौ (६,१.१०)
अर्थः— धातोर्द्वे स्तः। जुहोति। जुहुतः।

❖ अदादेशविधायकं विधिसूत्रम्—
सूत्रम्— अदभ्यस्तात् (७,१.४)
अर्थः— झस्यात्स्यात्। हुश्नुवोरिति यण्। जुह्वति॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'हु' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते जुहोत्यादयः)

| लिँट् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | जुहवाञ्चकार<br>जुहाव | जुहवाञ्चक्रतुः<br>जुहुवतुः | जुहवाञ्चक्रुः<br>जुहुवुः |
| मध्यमः | जुहवाञ्चकर्थ<br>जुहुविथ-जुहोथ | जुहवाञ्चक्रथुः<br>जुहुवथुः | जुहवाञ्चक्र<br>जुहुव |
| उत्तमः | जुहवाञ्चकार<br>जुहाव-जुहव | जुहवाञ्चकृव<br>जुहुविव | जुहवाञ्चकृम<br>जुहुविम |

हु + लिँट्

जुहु आम् + लिँट्

जुहो आम् + चकार

**जुहवाञ्चकार, जुहवांचकार**

❖ आम्-विधायकं विधिसूत्रम् श्लुवद्धिधायकमतिदेशसूत्रञ्च—

**सूत्रम्— भी-ह्री-भृ-हुवां श्लुवच्च (३,१.३९)**

**अर्थः—** एभ्यो लिँटि आम् वा स्यादामि श्लाविव कार्यं च। जुहवाञ्चकार, जुहाव। होता। होष्यति। जुहोतु, जुहुतात्। जुहुताम्। जुह्वतु। जुहुधि। जुहवानि। अजुहोत्। अजुहुताम्॥

❖ गुणविधायकं विधिसूत्रम्—

**सूत्रम्— जुसि च (७,३.८३)**

**अर्थः—** इगन्ताङ्गस्य गुणोऽजादौ जुसि। अजुहवुः। जुहुयात्। हूयात्। अहौषीत्। अहोष्यत्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'भी' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते जुहोत्यादयः)

भी + लँट्/तिप्
भी शप्+ति(जुहोत्यादिभ्यः श्लुः)
भी भी + ति (श्लौ)
भि भी + ति (ह्रस्वः)
बि भी +ति (अभ्यासे चर्च)
**बिभेति** (सार्वधातुकार्धधातुकयोः)

बि भी +तस्
बि भि +तस् (भियोऽन्यतरस्याम्)
**बिभितः, बिभीतः**

बि भी +झि
बि भी + अति (एरनेकाचो......)
**बिभ्यति**

**ञिभी भये॥ २॥ बिभेति**

❖ वैकल्पिक-इकारादेश-विधायकं विधिसूत्रम्—

सूत्रम्— भियोऽन्यतरस्याम् (६,४.११५)

अर्थः— इकारो वा स्याद्धलादौ क्ङिति सार्वधातुके। बिभितः, बिभीतः। बिभ्यति। बिभयाञ्चकार, बिभाय। भेता। भेष्यति। बिभेतु, बिभितात्, बिभीतात्। अबिभेत्। बिभीयात्। भीयात्। अभैषीत्। अभेष्यत्॥

भी+ लिँट्
बि भे आम् + लिँट् (भी-ह्री-भृ-हुवां श्लुवच्च)
बि भय् आम् + चकार
**बिभयाञ्चकार, बिभयांचकार**




हलादौ क्ङिति सार्वधातुके

# परस्मैपदिधातुषु ‘भी’ धातोः रूपाणि



| ञिभी भये<br>अनिट्,परस्मै. | प्रथमपुरुषः | | | मध्यमपुरुषः | | | उत्तमपुरुषः | | |
|---|---|---|---|---|---|---|---|---|---|
| लँट् | बिभेति | बिभितः,<br>बिभीतः | बिभ्यति | बिभेषि | बिभिथः,<br>बिभीथः | बिभिथ,<br>बिभीथ | बिभेमि | बिभिवः,<br>बिभीवः | बिभिमः,<br>बिभीमः |
| लिँट् | बिभयाञ्चकार<br>बिभाय | बिभयाञ्चक्रतुः<br>बिभ्यतुः | बिभयाञ्चक्रुः<br>बिभ्युः | बिभयाञ्चकर्थ<br>बिभयिथ,<br>बिभेथ | बिभयाञ्चक्रथुः<br>बिभ्यथुः | बिभयाञ्चक्र<br>बिभ्य | बिभयाञ्चकार<br>बिभाय<br>बिभय | बिभयाञ्चकृव<br>बिभ्यिव | बिभयाञ्चकृम<br>बिभ्यिम |
| लुँट् | भेता | भेतारौ | भेतारः | भेतासि | भेतास्थः | भेतास्थ | भेतास्मि | भेतास्वः | भेतास्मः |
| लृँट् | भेष्यति | भेष्यतः | भेष्यन्ति | भेष्यसि | भेष्यथः | भेष्यथ | भेष्यामि | भेष्यावः | भेष्यामः |
| लोँट् | बिभेतु<br>बिभितात्<br>बिभीतात् | बिभिताम्<br>बिभीताम् | बिभ्यतु | बिभिहि<br>बिभीहि<br>बिभितात्<br>बिभीतात् | बिभितम्<br>बिभीतम् | बिभित<br>बिभीत | बिभयानि | बिभयाव | बिभयाम |

भ्वसनुप्रयोगे—बिभयाम्बभूव, बिभयामासेत्यादयः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'भी' धातोः रूपाणि

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते जुहोत्यादयः)

| ञिभी भये अनिट्,परस्मै. | प्रथमपुरुषः | | | मध्यमपुरुषः | | | उत्तमपुरुषः | | |
|---|---|---|---|---|---|---|---|---|---|
| लँङ् | अबिभेत् | अबिभिताम् अबिभीताम् | अबिभयुः | अबिभेः | अबिभितम् अबिभीतम् | अबिभित अबिभीत | अबिभयम् | अबिभिव अबिभीव | अबिभिम अबिभीम |
| वि.लिँङ् | बिभियात् बिभीयात् | बिभियाताम् बिभीयाताम् | बिभियुः बिभीयुः | बिभियाः बिभीयाः | बिभियातम् बिभीयातम् | बिभियात बिभीयात | बिभियाम् बिभीयाम् | बिभियाव बिभीयाव | बिभियाम बिभीयाम |
| आ.लिँङ् | भीयात् | भीयास्ताम् | भीयासुः | भीयाः | भीयास्तम् | भीयास्त | भीयासम् | भीयास्व | भीयास्म |
| लुँङ् | अभैषीत् | अभैष्टाम् | अभैषुः | अभैषीः | अभैष्टम् | अभैष्ट | अभैषम् | अभैष्व | अभैष्म |
| लृँङ् | अभेष्यत् | अभेष्यताम् | अभेष्यन् | अभेष्यः | अभेष्यतम् | अभेष्यत | अभेष्यम् | अभेष्याव | अभेष्याम |

लुँङि— सिचि वृद्धिः परस्मैपदेषु

आशीर्लिँङि— अकृत्सार्वधातुकयोर्दीर्घः

# परस्मैपदिधातुषु ‘ह्री’ धातोः प्रक्रिया



ह्री लज्जायाम्॥ ३॥ जिह्रेति। जिह्रीतः। जिह्रियति। जिह्रयाञ्चकार, जिह्राय। ह्रेता। ह्रेष्यति। जिह्रेतु। अजिह्रेत्। जिह्रियात्। ह्रीयात्। अह्रैषीत्। अह्रेष्यत्॥

ह्री + लँट्/तिप्

ह्री शप्+ति (जुहोत्यादिभ्यः श्लुः)

ह्री ह्री + ति (श्लौ)

हि ह्री + ति (हलादिशेषः,ह्रस्वः)

झि/ जि ह्री +ति (कुहोश्चुः.अभ्यासे चर्च)

**जिह्रेति** (सार्वधातुकार्धधातुकयोः)

ह्री + लिँट्

जि ह्रे आम् + लिँट् (भी-ह्री-भृ-हुवां श्लुवच्च)

जि ह्रय् आम् + चकार

**जिह्रयाञ्चकार, जिह्रयांचकार**

जि ह्री +झि

जि ह्रिय् + अति (अचिश्नु......)

**जिह्रियति**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'पॄ' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते जुहोत्यादयः)

पॄ + लँट्/तिप्
पॄ पॄ +ति(जुहोत्यादिभ्यः श्लुःश्लौ)
पिर् पॄ +ति (अर्ति-पिपर्त्योश्च)
पि पॄ +ति (हलादिशेषः)
**पिपर्ति** (सार्वधातुकार्धधातुकयोः)

पि पॄ +तस् (उदोष्ठ्यपूर्वस्य)
पि पुर् +तस् (हलि च)
**पिपूर्तः**

पि पॄ +झि
पि पुर् +अति (उदोष्ठ्यपूर्वस्य)
**पिपुरति**

पॄ पॄ + अ
पर् पॄ + अ (उरत्)
पर् पार् + अ (वृद्धिः)
**पपार**

प पॄ + अतुस् (उरत्)
प पॄ + अतुस्
(ह्रस्वविधान-सामर्थ्यात् न गुणः)
प पृ + अतुस् (यणः)
**1.पप्रतुः**
प पर् + अतुस् (गुणः)
**2.पपरतुः**

**पॄ पालन-पूरणयोः॥ ४॥**

❖ इकारान्तादेशविधायकं विधिसूत्रम्—

**सूत्रम्— अर्ति-पिपर्त्योश्च (७,४.७७)**

**अर्थः—** अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ। पिपर्ति॥

❖ उदादेश-विधायकं विधिसूत्रम्—

**सूत्रम्— उदोष्ठ्यपूर्वस्य (७,१.१०२)**

**अर्थः—** अङ्गावयवौष्ठ्यपूर्वो य ॠत् तदन्तस्याङ्गस्य उत् स्यात्॥

❖ इको दीर्घविधायकं विधिसूत्रम्—

**सूत्रम्— हलि च॥ (८,२.७७)**

**अर्थः—** रेफ-वान्तस्य धातोरुपधाया इको दीर्घो हलि। पिपूर्तः। पिपुरति। पपार॥

वैकल्पिकह्रस्व-विधायकं विधिसूत्रम्—

**सूत्रम्— शॄ-दॄ-प्रां ह्रस्वो वा (७,४.१२)**

**अर्थः—** एषां (किति) लिँटि ह्रस्वो वा स्यात्। पप्रतुः॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'पॄ' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते जुहोत्यादयः)

पॄ इ तास्+ आ
पर् इ तास्+ आ
**परिता, परीता**

अपि पर् + त्
**अपिपः**

❖ गुण-विधायकं विधिसूत्रम्—

**सूत्रम्—** ऋच्छत्यॄताम् (७,४.११)

**अर्थः—** तौदादिक ऋच्छेर् ऋधातोर् ॠतां (ॠदन्तानां) च गुणो लिँटि। पपरतुः। पपरुः॥

इटो दीर्घविधायकं विधिसूत्रम्—

**सूत्रम्—** वॄतो वा (७,२.३८)

**अर्थः—** वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिँटि। परीता , परिता। परीष्यति, परिष्यति। पिपर्तु। अपिपः। अपिपूर्ताम्। अपिपरुः। पिपूर्यात्। पूर्यात्। अपारीत्॥

इटो दीर्घनिषेधकं विधिसूत्रम्—

**सूत्रम्—** सिँचि च परस्मैपदेषु (७,२.४०)

**अर्थः—** अत्र इटो न दीर्घः। अपारिष्टाम्। अपरीष्यत्, अपरिष्यत् ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु ‘हा’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते जुहोत्यादयः)

हा + लँट्/तिप्
हाहा+ति (जुहोत्यादिभ्यः श्लुःश्लौ )
जहा+ति (अभ्यासकार्याणि)
**जहाति**

जहा+तस्
जहि+तस्(जहातेश्च) =
**जहितः,जहीतः** (ई हल्यघोः)

जहाति, जहितः जहीतः, जहति
जहासि, जहिथः जहीथः, जहिथ जहीथ
जहामि, जहिवः जहीवः, जहिमः जहीमः

जहा+झि
जह् +अति (श्नाऽभ्यस्तयोरातः)
**जहति**

जहा+ अ
जहा + औ (आत औ णलः)
जहौ (वृद्धिः)

ओँहाक् त्यागे॥ ५॥ जहाति॥

❖ वैकल्पिक-इत्वविधायकं विधिसूत्रम्—
सूत्रम्— जहातेश्च (६,४.११६)
अर्थः— इद्वा स्याद्धलादौ क्ङिति सार्वधातुके। जहितः॥

❖ ईदादेश-विधायकं विधिसूत्रम्—
सूत्रम्— ई हल्यघोः (६,४.११३)
अर्थः— श्नाभ्यस्तयोरात ईत् स्यात् सार्वधातुके क्ङिति हलादौ (/हलि), न तु घोः। जहीतः॥

❖ आतो लोपविधायकं विधिसूत्रम्—
सूत्रम्— श्नाऽभ्यस्तयोरातः (६,४.११२)
अर्थः— अनयोरातो लोपः क्ङिति सार्वधातुके। जहति। जहौ। हाता। हास्यति।

# परस्मैपदिधातुषु 'हा' धातोः प्रक्रिया



जहा+ सि (लौँट्)
जहा + हि
जहाहि, जहिहि, जहीहि

(आ च हौ) (जहातेश्च) (ई हल्यघोः)

अजहा+ त् (लँङ्)
अजहात्

जहातु, जहितात्, जहीतात्॥

❖ आकारादेशविधायकं विधिसूत्रम्—

सूत्रम्— आ च हौ (६,४.११७)

अर्थः— जहातेर्हौ परे आ स्यात्, चाद् इदीतौ।

जहाहि, जहिहि, जहीहि। अजहात्। अजहुः॥

❖ आकार-लोपविधायकं विधिसूत्रम्—

सूत्रम्— लोपो यि (६,४.११८)

अर्थः— जहातेरालोपो यादौ सार्वधातुके।

जह्यात्। 'एर्लिङि' हेयात्। अहासीत्। अहास्यत्॥

अजहा+ उस्
अजह्+ उस्
अजहुः (श्नाऽभ्यस्तयोरातः)

जहा+ यास् त्
जह्+ यास् त्
जह्यात्

हा+ यास् त्
हे+ यास् त्
हेयात्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदिधातुषु 'मा, हा' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते जुहोत्यादयः)

मा + लँट्/त (जुहोत्यादिभ्यः श्लुः)
मामा+त, (श्लौ)
मिमा+त (भृञामित्)
मिमी+त (ई हल्यघोः)
**मिमीते**

मामा + ए
ममा + ए
मम् + ए
(आतो लोप इटि च)
**ममे**

मिमा + आते (भृञामित्)
मिमा + आते
(श्नाऽभ्यस्तयोरातः)
**मिमाते**

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ते | आते | अते | से | आथे | ध्वे | ए | वहे | महे |
| ए | आते | इरे | से | आथे | ध्वे | ए | वहे | महे |
| आ (डा) | रौ | रस् | | | | | | |

ई हल्यघोः – श्नाभ्यस्तयोरात ईत् स्यात् सार्वधातुके क्ङिति हलादौ , न तु घोः।

श्नाऽभ्यस्तयोरातः – अनयोरातो लोपः क्ङिति सार्वधातुके।

**माङ् माने शब्दे च॥ ६॥**

इत्वविधायकं विधिसूत्रम्—

सूत्रम्— **भृञामित्** (७,४.७६)

अर्थः— भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ। मिमीते। मिमाते। मिमते। ममे। माता। मास्यते। मिमीताम्। अमिमीत। मिमीत। मासीष्ट। अमास्त। अमास्यत॥

**ओँहाङ् गतौ॥ ७॥** जिहीते। जिहाते। जिहते। जहे। हाता। हास्यते। जिहीताम्। अजिहीत। जिहीत। हासीष्ट। अहास्त। अहास्यत॥

# उभयपदिधातुषु 'भृ' धातोः प्रक्रिया

डुभृञ् धारणपोषणयोः॥ ८॥ बिभर्ति। बिभृतः। बिभ्रति। बिभृते। बिभ्राते। बिभ्रते। बिभराञ्चकार, बभार। बभर्थ। बभृव। बिभराञ्चक्रे, बभ्रे। भर्तासि, भर्तासे। भरिष्यति, भरिष्यते। बिभर्तु। बिभराणि। बिभृताम्। अबिभः। अबिभृताम्। अबिभरुः। अबिभृत। बिभृयात्, बिभ्रीत। भ्रियात्, भृषीष्ट। अभार्षीत्, अभृत। अभरिष्यत्, अभरिष्यत॥

भृ भृ+ति अभ्यासकार्ये 'भृञामित्' इत्यभ्यासस्येत्वे बि भृ+ति इति जाते 'सार्वधातुकार्धधातुकयो' इति ऋकारस्य 'अर्' गुणे— बिभर्ति

बि भृ+झि इति जाते 'अदभ्यस्तात्' इत्यनेन झेरति बि भृ+अति इति जाते यणि कृते— बिभ्रति

भृ आम्+लिँट् 'भी-ह्री...' इत्यनेन आमि वा श्लुवच्चातिदिष्टे 'भृञामित्' इत्यभ्यासस्येत्वे अभ्यासादिकार्ये अनभ्यास-ऋकारस्य गुणे च कृते बिभर् आम्+ लिँट्परक-कृभ्वस्तेरनुप्रयोगे— बिभराञ्चकार, बिभराञ्चक्रे, बिभराम्बभूव, बिभरामास आमाभावे तु बभार, बभ्रे

धातोरनिट्वान्नेट्— भर्तासि, भर्तासे लृँटि तु 'ऋद्धनोः स्ये' इत्यनेन ऋदन्तत्वादिट् — भरिष्यति, भरिष्यते

लौँटि तु पित्स्वेव गुणे— बिभर्तु, बिभराणि, बिभरै। लँङि तिपि सिपि— 'अबिभृ+त्' इत्यवस्थायां गुणे 'अबिभर्+त्' इत्यत्र हल्ङ्यादिना तकारलोपे रेफस्य विसर्गे च — अबिभः। बहुवचने अभ्यस्तत्वाज्झेर्जुसि 'अबिभृ+उस्'जुसि च गुणे कृते — अबिभरुः

आशीर्लिँङि 'रिङ्शयग्लिँङ्क्षु' इति सूत्रेण ऋकारस्य रिङादेशे — भ्रियात्

लुँङि आत्मनेपदे तु 'उश्च' इत्यनेन सिचः कित्वाद्गुणो न ।'त-थास्-ध्वमि' च 'ह्रस्वादङ्गाद्' इत्यनेन सिचो लुकि— अभृत

संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु ‘दा’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते जुहोत्यादयः)

दा दा + तस्
द दा + तस्
द द् + तस्
द त् + तस्
दत्तः

दा दा + सि
द दा + हि
दे + हि
देहि

अ दा स् + त्
अ दा स् + त (गातिस्था....)
अगात्

अ दा स् + त
अ दि स् + त
अ दि + त (ह्रस्वादङ्गात्)
अदित

घ्वसोरेद्धावभ्यासलोपश्च– घुसञ्ज्ञकानामङ्गानाम् अस्तेश्च एकारादेशो भवति हौ परे अभ्यासलोपश्च।

ई हल्यघोः – श्नाभ्यस्तयोरात ईत् स्यात् सार्वधातुके क्ङिति हलादौ , न तु घोः।

श्नाऽभ्यस्तयोरातः – अनयोरातो लोपः क्ङिति सार्वधातुके।

डुदाञ् दाने॥ ९॥ ददाति। दत्तः। ददति। दत्ते। ददाते। ददते। ददौ, ददे। दातासि, दातासे। दास्यति, दास्यते। ददातु॥

घुसञ्ज्ञाविधायकं सूत्रम्—

सूत्रम्— **दाधा घ्वदाप् (१,१.२०)**

अर्थः— दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना। घ्वसोरित्येत्वम्। देहि। दत्तम्। अददात्, अदत्त। दद्यात्, ददीत। देयात्, दासीष्ट। अदात्। अदाताम्। अदुः॥

इदन्तादेशविधायकं विधिसूत्रं किद्वत्भावविधायकमतिदेशसूत्रञ्च—

सूत्रम्— **स्थाघ्वोरिच्च (१,२.१७)**

अर्थः— अनयोरिदन्तादेशः सिच्च कित्स्यादात्मनेपदे। अदित। अदास्यत्, अदास्यत॥

# उभयपदिधातुषु ‘धा’ धातोः प्रक्रिया



संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

धा धा+ तस्
द धा+ तस्
द ध् + तस्
ध ध् + तस्
ध त् + तस्
धत्तः



डु धाञ् धारणपोषणयोः॥ १०॥

❖ भषादेशविधायकं विधिसूत्रम्—

**सूत्रम्— दधस्तथोश्च (८,२.३८)**

**अर्थः—** द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथोः स्ध्वोश्च परतः। धत्तः। दधति। दधासि। धत्थः। धत्थ। धत्ते। दधाते। दधते। धत्से। धद्ध्वे। ध्वसोरेद्धावभ्यास लोपश्च। धेहि। अदधात्, अधत्त। दध्यात्, दधीत। धेयात्, धासीष्ट। अधात्, अधित। अधास्यत्। अधास्यत॥

ई हल्यघोः – श्नाभ्यस्तयोरात ईत् स्यात् सार्वधातुके क्ङिति हलादौ , न तु घोः।

श्नाऽभ्यस्तयोरातः – अनयोरातो लोपः क्ङिति सार्वधातुके।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'निज्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते जुहोत्यादयः)

निजिर् + ति
निज् निज् + ति
नि निज् + ति
ने निज् + ति
(अभ्यास-लघूपधगुणौ)
ने नेग् + ति (चोः कुः)
ने नेक् + ति (खरि च)
**नेनेक्ति**

ने नेज् + सि
ने नेग् + सि (कुत्वम्)
ने नेक् + सि (चर्त्वम्)
ने नेक् + षि (षत्वम्)
**नेनेक्षि**

नेक् स्य + ति (षत्वम्)
**नेक्ष्यति**

लोँट्
ने निज् + सि
ने निज् + हि
ने निग् + धि (कुत्वम्)
**नेनिग्धि**

णिजिँर् शौचपोषणयोः ॥ ११ ॥

वार्तिकम्—(इर इत्संज्ञा वाच्या)

अर्थः— धातो इर् इत्सञ्ज्ञकः स्यात्।

❖ गुण-विधायकं विधिसूत्रम्—

सूत्रम्— णिजां / निजां त्रयाणां गुणः श्लौ।

अर्थः— णिज्-विज्-विषाम् अभ्यासस्य गुणः स्यात् श्लौ। नेनेक्ति। नेनिक्तः। नेनिजति। नेनिक्ते।
निनेज, निनिजे।
नेक्ता। नेक्ष्यति, नेक्ष्यते।
नेनेक्तु। नेनिग्धि॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'निज्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते जुहोत्यादयः)

**लोँट्**

ने निज् + आनि

**नेनिजानि**

**लँङ्**

अ ने नेज् + ति

अ ने नेज् + त्

अ ने नेग् +

अ ने नेक् +

**अनेनेक्, अनेनेग्**

**लुँङ्**

अ निज् च्लिँ + त्

अ नैज् स् + त्

अ नैग् स् + ई त्

अ नैक् स् + ई त्

**अनैक्षीत्**

**लुँङ्**

अ निज् च्लिँ + त्

अ निज् अङ् + त्

**अनिजत्**

❖ गुण-निषेधकं विधिसूत्रम्—

सूत्रम्— नाभ्यस्तस्याचि पिति सार्वधातुके (७,३.८७)

अर्थः— लघूपधगुणो न स्यात्।

(अभ्यस्तसंज्ञकस्य अङ्गस्य लघूपधस्य अजादौ पिति सार्वधातुके गुणो न भवति।)

नेनिजानि। नेनिक्ताम्। अनेनेक्। अनेनिक्ताम्। अनेनिजुः। अनेनिजम्। अनेनिक्त। नेनिज्यात्। नेनिजीत। निज्यात्, निक्षीष्ट॥

❖ अङो विकल्पार्थ विधिसूत्रम्—

सूत्रम्— इरितो वा॥ (३,२.५७)

अर्थः— इरितो धातोश्च्लेरङ् वा परस्मैपदेषु।

अनिजत्, अनैक्षीत्, अनिक्त। अनेक्ष्यत्,अनेक्ष्यत॥

॥ इति जुहोत्यादयः॥ ३॥

*************

# जुहोत्यादिगणस्य परीक्षणम्

०१. 'हु दानादनयोः' इत्यत्र दानशब्दस्य कोऽर्थः ?

क. स्वस्वत्वनिवृत्तिः

ख. परस्वत्वोत्पत्तिः

**ग. होमकरणम्**

घ. प्रदानम्

०२. 'श्लुः' कस्य भवति ?

क. तिपः

ख. धातोः

ग. परस्मैपदानाम्

**घ. शपः**

०३. एतेषु प्रत्ययस्यादर्शनं सञ्ज्ञा नास्ति—

क. लुक्

ख. श्लु

ग. लुप्

**घ. शप्**

०४. 'जुह्वति' इत्यत्र यणादेशः केन ?

क. इको यणचि

ख. एरनेकाचोऽसंयोगपूर्वस्य

**ग. हुश्नुवोः सार्वधातुके**

घ. ओः सुपि

०५. 'अजुहवुः' इत्यत्र 'जुसि च' इति सूत्रेण गुणादेशः कस्य स्थाने भवति ?

क. उसः उकारस्य स्थाने

ख. अभ्यासोकारस्य स्थाने

**ग. अनभ्यासोकारस्य स्थाने**

घ. अकारस्य स्थाने

०६. 'अहोषीत्' विषये इदमेव कथनं सर्वथा सङ्गतम्—

क. अयं प्रथमे लुँङ्लकारस्यैकवचनस्य रूपम्।

ख. 'हु' धातोरिदं रूपम्।

ग. 'अस्तिसिचोऽपृक्ते' इति सूत्रेणात्रेडागमः।

**घ. लुँङीदं रूपमशुद्धम्।**

०७. 'विभ्यति' इदं रूपं वर्त्तते—

क. भीधातोः लँटि प्रथमपुरुषस्यैकवचनस्य

ख. भीधातोः लँटि प्रथमपुरुषस्य बहुवचनस्य

ग. ञिभीधातोः लँटि प्रथमपुरुषस्य बहुवचनस्य

**घ. भीधातोः न कुत्रापि**

**०८. 'अर्त्तिपिपर्त्योश्च' इति सूत्रस्य प्रवृत्ति एतेषु कुत्र नास्ति—**

क. पिपर्त्ति

ख. पिपुरति

**ग. परिता**

घ. अपिपः

**०९. एतेषु 'पॄ'धातोः ह्रस्वः कुत्र भवति—**

**क. पप्रतुः**

ख. पिपुरति

ग. पपार

घ. पपरतुः

**१०. अशुद्धं युग्मं चिनुत—**

क. परिता—परीता

ख. परिष्यति—परीष्यति

ग. अपारिष्टाम्—अपारीष्टाम्

घ. अपरिष्यत्—अपरीष्यत्

**११. ' जहति' इति रूपं वर्त्तते—**

क. हा-धातोः प्रथमैकवचने

ख. हा-धातोः प्रथमबहुवचने

ग. जह्-धातोः प्रथमे एकवचने

घ. जह्-धातोः प्रथमबहुवचने

**१२. एतेषु कस्य धातोः लँाट्यष्टादश रूपाणि भवन्ति—**

क. पॄ

ख. ह्री

ग. हा

घ. मा

**१३. 'जह्यात्' इत्यत्राकारलोपः केन सूत्रेण भवति ?**

क. आ च हौ

ख. लोपो यि

ग. तस्य लोपः

घ. जुहोत्यादिभ्यः श्लुः

**१४. 'माङ्' धातोः प्रयोगोऽस्मिन् अर्थे उपसर्गं विनैव भवति—**

क. सम्माने

ख. प्रमाणे

ग. अनुमाने

घ. विज्ञाने

**१५. 'मिमीते' इत्यत्र ईत्वं केन —**

क. भृञामित्

ख. स्थाघोरिच्च

**ग. ई हल्यघोः**

घ. अर्त्तिपिपर्त्योश्च

**१६. 'हास्यते' इति रूपं वर्त्तते—**

क. हु दानादनयोः

ख. हा त्यागे

**ग. हा गतौ**

घ. हस् हसने

**१७. 'देहि' रूपं कस्य धातोः?**

**क. दा**

ख. धा

ग. दद्

घ. दह्

**१८. 'अदात्' इति रूपं दा-धातोः कुत्र भवति?**

**क. लुँङि**

ख. लँङि

ग. आशीर्लिँङि

घ. लृँङि

**१९. 'धत्तः' इत्यत्र भष्भावः केन ?**

क. दादेर्धातोर्घः

ख. एकाचो बशो भष् झषन्तस्य स्ध्वोः

ग. दधस्तथोश्च

घ. वाऽवसाने

**२०. धा-धातोः लुँङि किं रूपम् ?**

क. अधात्

ख. अधित

ग. अधात् ,अधित

घ. अधीसीष्ट

**२१. 'णिजिर् शौचपोषणयोः' इत्यत्र शौचपदेन कस्य ग्रहणम्—**

क. स्नानम्

**ख. वस्त्रप्रक्षालनम्**

ग. स्वच्छीकरणम्

घ. मलोत्सर्गः

**२२. 'नेनेक्ति' इत्यत्र अभ्यासस्य गुणः केन सूत्रेण—**

**क. निजां त्रयाणां गुणः श्लौ**

ख. सार्वधातुकार्धधातुकयोः

ग. पुगन्तलघूपधस्य च

घ. ह्रस्वस्य गुणः

**२३. 'निज्' धातोः मध्यमे लौँटीदं रूपं भवति—**

क. नेनेग्धि

**ख. नेनिग्धि**

ग. नेनेग्हि

घ. नेहि

**२४. 'निज्' धातोः लुँङि किं रूपम्—**

क. अनेनेक्

ख. अनेनिजुः

**ग. अनिजत्**

घ. अनैक्षीत

**२५. 'अवनेजनम्' इत्यस्य कोऽर्थः?**

क. श्राद्धे कुशेषु जलसेचम्

ख. सामान्यतः पादप्रक्षालनम्

ग. पोषणम्

घ. वस्त्रप्रक्षालनम्